समासचक्र
षोढा समासः संक्षेपाद् अष्टाविंशतिधा पुनः ।
नित्यानित्यत्वयोगेन लुगलुक्त्वेन च द्विधा ॥१
तत्राष्टधा तत्पुरूषः सप्तधा कर्मधारयः ।
सप्तधा च बहुव्रीहिर्द्विगुराभाषितो द्विधा ॥२
द्वन्द्वोऽपि द्विविधो ज्ञेयोऽव्ययीभावो द्विधा मतः ।
तेषां पुनः समासानां प्राधान्यं स्याच्चतुर्विधम् ॥३
चकारबहुलो द्वन्द्वः स चासौ कर्मधारयः ।
यस्य येषां बहुव्रीहिः शेषस्तत्पुरुषः स्मृतः ॥४

Meaning:
1. There are six types of SamAsas (namely tatpuruSha, karmadhAraya, bahuvrIhi, dvigu, dvandva and avyayIbhAva) in brief. But in detail they are 28 in total. These 28 types are further divided into nityayoga and anityayoga / luk and aluk…
2. tatpuruSha is of 8 types.
karmadhAraya is of 7 types.
bahuvrIhi is of 7 types.
dvigu is of 2 types.
3. dvandva is also of 2 types.
avyayIvbhAva is of 2 types. (Thus making it 28 types).
The samAsas are also sometimes classified into 4 types according to the weightage of its constituents.
4. The samAsas having preponderance of च (and) is called dvandva.
samAsa showing ‘that and this' is karmadhAraya.
samAsa having यस्य or येषां (whose) in anvaya is called bahuvrIhi.
The rest are tatpuruSha.

प्रयोगाः पञ्चविधाः
कर्तृकर्मक्रियायुक्तः प्रयोगः स्यात्सकर्मकः ।
अकर्मकः कर्मशून्यः कर्मद्वन्द्वो द्विकर्मकः ॥५

Meaning:
sakarmaka : having kartR and karma
akarmaka : having only kartR
dvikarmaka : having two karmas

उदाहरणानिः
(१) सकर्मकप्रयोगो यथा – कृष्णो भक्तान् रक्षति ।
(२) अकर्मकप्रयोगो यथा – कृष्णस्तिष्ठति ।
(३)कर्मणिप्रयोगो यथा – विष्णुना प्रपञ्चः क्रियते ।
(४) भावेप्रयोगो यथा – कृष्णेन क्रियते ।
(५) द्विकर्मकप्रयोगो यथा – (नृपः) धराम् अन्नं दुदोह ।
इति प्रयोगविधिः

Examples: They are self explanatory.
1. kRShNa is kartR and bhakta is karma
2. kRShna is kartR and no karma
3. and 4. The only difference between karmaNi and bhAve prayoga is that in karmaNi prayoga there is some karma (prapaNYca) and in bhAve there is no karma.
5. dharA and anna are both karmas…

(Comments by Mr. H N Bhat:
Verb patterns

This seems extraneous to the title of the work as it has nothing to do with
the compound formation.

कर्तृकर्मक्रियायुक्तः प्रयोगः स्यात्सकर्मकः ।

अकर्मकः कर्मशून्यः कर्मद्वन्द्वो द्विकर्मकः ॥५

This verse as it is doesn’t need any comments. It is clear in its
assertion.
SOV – pattern of sentence is called सकर्मक (seems to be a translation of
English pattern)
.
SV – Intransitive pattern of the above अकर्मक, and double object (different
from
English Direct and Indirect Objects) is द्विकर्मक.

I could not find a equivalant of the प्रयोग in the above sense.The only rule
regarding the Verb Pattern is लः कर्मणि च भावे च अकर्मकेभ्यः । । ३,४.६९ । ।

Meaning

The tense affixes l(a)(T) l(i)(T) l(u)(T) l(R)(T) l(e)(T) l(o)(T) l(a)(G)
l(i)(G) l(u)(G) l(R)(G) called lakAra are used in denoting the object or
karman and the agent or kartR in the case of Transitive verbs; and after
Intransitive verbs they denote the action or bhAva as well as the agent or
kartR

One more postscript to the above. It doesn’t contain the popularly known
भावे प्रयोग as it is for the intransitive verbs only to denote action and
our writer seems to take it if the word denoting object is used in the
sentence or not for classifying अकर्मक and सकर्मक and कर्मणि and भावे )
अथ समासविधिः
समासाः षड्विधाः । तत्पुरुषः कर्मधारयो बहुव्रीहिर्द्विगुर्द्वन्द्वोऽव्ययीभावश्चेति भेदात् । तल्लक्षणानि तु -
(१) पूर्वपदार्थप्रधानोऽव्ययीभावः ।
(२) उत्तरपदार्थप्रधानस्तत्पुरुषः ।
(३) उभयपदार्थप्रधानो द्वन्द्वः ।
(४) अन्यपदार्थप्रधानो बहुव्रीहिः ।
(५) द्विगुकर्मधारयौ तत्पुरुषभेदौ ।

samAsas are of six types:
1. tatpuruSha
2. karmadhAraya
3. bahuvrIhi
4. dvigu
5. dvandva and
6. avyayIbhAva
their definitions are as follows:
(1) avyayIbhAva – in which first object is more important (pUrvapadArthapradhAna)
(2) tatpurUSha – in which second object is more important (uttarapadArthapradhAna)
(3) dvandva – in which both objects are equally important (ubhayapadArthapradhAna)
(4) bahuvrIhi – in which some other object (other than the two objects mentioned) is more important
(5) dvigu and karmadhAraya – they are subset of tatpurUSha .

(१) तत्पुरुषः ।
तत्राष्टधा तत्पुरुषक्रमः । प्रथमातत्पुरुषो द्वितीयातत्पुरुषस्तृतीयातत्पुरुषश्चतुर्थीतत्पुरुषः पञ्चमीतत्पुरुषः षष्ठीतत्पुरुषः सप्तमीतत्पुरुषो नञ्तत्पुरुषश्चेति ।

(1) tatpurUSha -
tatpurUSha is of eight types:
1. prathamA tatpurUSha
2. dvitIyA tatpurUSha
3. tRtIyA tatpurUSha
4. caturthI tatpurUSha

5. paYcamI tatpurUSha
6. ShaShThI tatpurUSha
7. saptamI tatpurUSha
8. naY tatpurUSha

उदाहरणानिः

तत्र प्रथमातत्पुरुषो यथा-
- अर्धं पिप्पल्याः अर्धपिप्पली।
- पूर्वं कायस्य इति पूर्वकायः।
द्वितीयातत्पुरुषो यथा-
- कृष्णं श्रितः इति कृष्णश्रितः।
-ग्रामं ततो इति ग्रामगतः।
- कान्तारम् अतीतः इति कान्तारातीतः।
तृतीयातत्पुरुषो यथा -
- शङ्कुलया खण्डः इति शङ्कुलाखण्डः।
- धान्येन अर्थः इति धान्यार्थः।
चतुर्थीतत्पुरुषो यथा -
- यूपाय दारु इति यूपदारु ।
- कुण्डलाय हिरण्यम् इति कुण्डलहिरण्यम् ।
- गुरवे दक्षिणा इति गुरुदक्षिणा ।
पञ्चमीतत्पुरुषो यथा -
- अर्थात् अपेतः इति अर्थापेतः ।
- सिंहात् भयम् इति सिंहभयम्।
- वृश्चिकात् भीः इति वृश्चिकभीः ।
षष्ठीतत्पुरुषो यथा -
- कृष्णस्य भक्तः इति कृष्णभक्तः ।
- आम्रस्य फलम् इति आम्रफलम् ।
- राज्ञः पुरुषः इति राजपुरुषः ।
सप्तमीतत्पुरुषो यथा -
- अक्षेषु शौण्डः इति अक्षशौण्डः ।
- कर्मणि कुशलम् इति कर्मकुशलः ।
- विद्यायां निपुणः इति विद्यानिपुणः ।
नञ् तत्पुरुषो यथा -
- न ब्राह्मणः इति अब्राह्मणः ।
- न वृषभः इति अवृषभः ।
- पापाभावः इति अपापम् ।
- धर्मविरुद्धः इति अधर्मः ।
इति तत्पुरुषः

These are examples of tatpurUSha.
The type of tatpurUSha depends on the case suffix you have to append to the pUrvapada. e.g. आम्रस्य फलम् इति आम्रफलम् . In this case we have to append genitive case (ShaShThI vibhakti) to the pUrvapada. Therefore it is ShaShThI tatpurUSha..

नञ् तत्पुरुष needs different treatment. The words having prefixes अ and अन् in negation are called naY tatpurUSha…

अथ कर्मधारयः
स च विशेषणपूर्वपदो विशेष्यपूर्वपदो विशेषणोभयपद उपमानपूर्वपद उपमानोत्तरपदः सम्भावनापूर्वपदोऽवधारणापूर्वपदश्चेति भेदात् सप्तविधः।

karmadhAraya:
It is of seven types as mentioned below….
1. visheShaNapUrvapada (the first word is adjective)
2. visheShyapUrvapada (the first word is visheshya – the one to which adjective is to be appended)
3. visheShaNobhayapada (both the words are adjectives)
4. upamAnapUrvapada (The first word is upamAna – the thing to which comparision is made)

5. upamAnottarapada (The second word is upamAna)
6. sambhAvanApUrvapada (the first word is sambhAvanA, joined by iti)and
7. avadhAraNApUrvapada (the first word is avadhAraNA, joined by eva)
Note: The examples below mentioned also has one other type namely
madhyamapadalopI (in which one or more word has to be imported to get a legible meaning and connection between the first and the second word)

(१) तत्र विशेषणपूर्वपदः कर्मधारयो यथा -
- कृष्णश्चासौ सर्पश्च कृष्णसर्पः । कृष्णौ च तौ सर्पौ च कृष्णसर्पौ। कृष्णाश्च ते सर्पाः कृष्णसर्पाः
-रक्ता चासौ लता च रक्तलता। रक्ते च ते लते च रक्तलते। रक्ताश्च तः लताश्च रक्तलताः।
- नीलं च तत् उत्पलं च नीलोत्पलम्। नीले च ते उत्पले च नीलोत्पले। नीलानि च तानि उत्पलानि च नीलोत्पलानि।
visheShaNapUrvapada karmadhAraya :
kRShNa – adjective, sarpa – visheshya (the one to which adjective is appended)
similarly for others…

(२) विशेष्यपूर्वपदः कर्मधारयो यथा – वैयाकरणश्चासौ खसूचिश्च वैयाकरणखसूचिः। गोपालश्चासौ बालश्च इति गोपालबालः|
visheshyapUrvapada karmadhAraya:
second word bAla is adjective and gopAla is visheshya… Therefore it is visheshyapUrvapada.

(३) विशेषणोभयपदः कर्मधारयो यथा – शीतं च तत् उष्णं च इति शीतोष्णम् ।
visheShaNobhayapada:
zIta and uShNa both are adjective. Therefore it is visheShaNobhayapada karmadhAraya.
Note: Here, the word zItoShNam refers to something which is somewhat cold and somewhat hot… e.g water for bathing / moonlight for the bereft lovers etc.

(४) उपमानपूर्वपदः कर्मधारयो यथा – मेघ इव श्यामो मेघश्यामः । कम्बुवत् ग्रीवा कम्बुग्रीवा । चन्द्रवत् मुखम् चन्द्रमुखम्।
upamAnapUrvapada karmadhAraya:
megha – upamAna (the thing to which something is compared)
zyAma – upameya (the thing which is to be compared)

(५) उपमानोत्तरपदः कर्मधारयो यथा – पुरुषः व्याघ्र इव पुरुषव्याघ्रः। नरः सिंह इव नरसिंहः।
upamAnottarapada karmadhAraya:
Here the upamAna vyAghra is the second word and upameya purUSha is the first word. Therefore it is an example of upamAnottarapada.

(६) सम्भावनापूर्वपदः कर्मधारयो यथा – गुण इति बुद्धिः गुणबुद्धिः ।
sambhAvanApurvapada karmadhAraya: The meaning is not clear to me. I am trying to find a suitable English translation for this.

(Comments courtesy ShrimallalitAlAlita: यद्यपि गुणेषु दोषदृष्टिरसूयेत्यादाविवात्रापि गुणबुद्धेर्विषयान्वेषणेन तस्मिन्गुणत्वसम्भाविका धीर्गुणबुद्धिरिति वक्तुं शक्यते तथापि तुल्याधिकरणपदसमुदायविशेषत्वरूपकर्म्मधारयत्वं कथमिति चिन्त्यम् । नीलोत्पलादिष्विवात्रैकपदार्थेऽपरपदार्थस्य तादात्म्याभावात् । न हि गुणे एव बुद्धित्वं बुद्धौ वा गुणत्वम् । किन्तु गुणत्वप्रकारकत्वं धियि ।

गुणबुद्धिपदार्थः क इति चिन्त्यम् । गुणविषयिणी बुद्धिरिति स्यात् ।
यथा गुणेषु दोषदृष्टिः असूया इत्युच्यते । तथैव बलादिषु गुणबुद्धिरित्युक्तिः सम्भवति । तथा च बलादिः गुणबुद्धेः विषयः ।
अपि च बलादिषु बलादिबुद्धिरेव युक्ता नेतरा । बलादेः स्वरूपेण गुणत्वाभावात् । गुणत्वं तु तस्योपकारकत्वेन स्थलविशेषे सम्भाव्यते । अत एव बलादिषु गुणबुद्धिः नाम गुणत्वसम्भाविका धीः । एवञ्च गुणधीः = गुण इति धीः = गुणत्वसम्भाविका धीः ।
इदानीमत्र समासे गुणपदधीपदयोस्समानविभक्तिकत्वात् कर्मधारयत्वमपि स्वीकार्यमेव ।
एवञ्च समाहितमाकाङ्क्षितं तव ।

इदानीमत्र शङ्का एका -
नीलोत्पलादिषु समानाधिकरणत्वमात्रं नास्ति । किन्तु तत्र नीलस्योत्पलस्य च तादात्म्यमपि ज्ञायते सामानाधिकरण्यात् । अत एव तादात्म्यज्ञापकसामानाधिकरण्यविशिष्टपदसमुदायविशेषः कर्मधारय इति वक्तव्यम् । तादृशश्च कर्मधारयो न गुणबुद्धिस्थले वर्त्तते ।
गुणबुद्धिपदयोस्सामानाधिकरण्येऽपि तादात्म्याभावात् । न हि गुणो बुद्धिः , किन्तु बलादिरेव । न वा बुद्धिरेव गुणः , बलादेरेव तथात्वात् । इति ।

अत्र किं समाधानं स्यादित्यन्वेष्टव्यम् ।

कश्चिद्विद्वानत्र पृष्ट आह – न समासचक्रोक्तविभागाः पाणिनीयमूलाः इति । अयं तस्याशयः – पाणिनीये तादृशनामोक्तिपूर्वककर्मधारयविभागो न दृश्यत इति ।)

(Comments by GSS Murthy:
सम्भावनापूर्वपदकर्मधारयः: तमाल इति वृक्षः तमालवृक्षः, गुण इति बुद्धिः गुणबुद्धिः, सह्य इति नगः सह्यनगः

सम्भावना means supposing, fancying
अवधारणा means affirmation, emphasis, limitation

My view is that
संभावना conveys that तमाल is a sub-category of वृक्ष.If I may borrow from mathematics, तमाल is an element of group वृक्ष, गुण of बुद्धि, सह्य of नग)

(Comments by H.N. Bhat:उत्कटैककोटिकः संशयः – संभावना,
अवधारणम् – इतरव्यावर्तनेन स्वस्मिन् विषये निश्चयः इति अनयोर्विशेषः।
संभावना अन्यधर्मसंबन्धेन अन्यत्र तादात्म्यायोपयुज्यते चेद् उत्प्रेक्षाविषयः ।
एवकारस्य इतरव्यावतनेन स्वस्मिन्नवधारणम् – मुखमेव पद्मम्;
इत्यादौ मयूरव्यंसकादौ पाठेन तत्पुरुषत्वम्। अवधारणा तु इतरव्यार्तनमात्रेण, सामानाधिकरण्यमात्रेण कर्मधारयत्वमिति भाति। रूपकसमासस्यायं विषयः। मुखं कमलमिव इति विग्रहे तु उपमितसमासः इति व्यवहारः, उपमानपूर्वपदकर्मधारय इति तु चिन्त्यम्।
========

परं तु प्रथमे, संभावना तु अतस्मिन् अन्यधर्मसम्बन्धेन अन्यत्वेन् संभावना तु नात्र अतीवोपयोगिनी, यतश्च गुण इति बुद्धिरिति अगुणे गुणत्वसंभावनायां संगच्छते कथं चित्, अन्यत्र चूतवृक्षादौ तु न संगच्छते; अतश्च चूतश्चासौ वृक्षश्च इत्यादिः समासस्तु स्यादेव।

चूतस्तु वृक्षविशेषः, इति तु तत्र चूते चूतत्वसंभावना नापेक्ष्यते एव।

संभवः संभावना – भू प्राप्तौ इति धातोः, चूतत्वं प्राप्तः वृक्षः इत्यर्थे चूतवृक्ष इति समासस्तु स्यादेव। तद्विवरणं संभावना इति तुल्यमेव। पाणिनीये तु तथा व्यवहारस्य मूलं चिन्त्यम्।

तत्र उभयत्रापि सूत्रैः समर्थनं तु नास्त्रयेव। सुप्सुपा इति तु सामान्येन, "अभिधानलक्षणा हि कृत्तद्धितसमासाः" इत्यभिधानापेक्षया समासविवरणं भवतीति समाधेयम्। एवं कर्मधारयत्वमपि सामानाधिकरण्यमात्रेण व्यवहारः। इति मे मतिः।)

(७) अवधारणापूर्वपदः कर्मधारयो यथा – विद्यैव धनं विद्याधनम् । अविद्यैव शृङ्खला अविद्याशृङ्खला ।

avadhAraNApUrvapada karmadhAraya: vidyA is dhanam – knowledge is wealth. avidyA is shRGkhalA. Here, there is abheda between the first and the second word of samAsa. The abheda is shown by similar vibhaktis and the word 'eva' is for determining it. (Correction by ShrimallalitAlAlitaH, uncorrected version was : Here, there is abheda between the first and the second word of samAsa. The abheda is shown by the word 'eva'.)

(Comments courtesy ShrimallalitAlAlita: अवधारणा निश्चयः । विद्यामात्रस्य धनत्वमाद्यपदमपरञ्चाविद्यामात्रस्य शृङ्खलात्वं ज्ञापयति । मात्रपदं मुख्यत्वपरम् । कर्म्मधारयत्वञ्च समानविभक्तिकत्वेनैकपदार्थेऽपरपदार्थस्य तादात्म्यज्ञापनात् । तथा चाद्ये विद्याधनयोरपरस्मिंश्चाविद्याशृङ्खलयोरभेदो ज्ञायते ।)
(Comments by GSS Murthy: अवधारणापूर्वपदकर्मधारयः विनय एव धनम् विनयधनम्, मुखमेव चन्द्रः मुखचन्द्रः
अवधारणा means affirmation, emphasis, limitation
अवधारणा restricts धनम् to the particular namely विनयम् . Generally there is an element of metaphor in अवधारणा.)

(८) मध्यमपदलोपी समासो यथा – शाकप्रियः पार्थिवः शाकपार्थिवः । देवपूजको ब्राह्मणः देवब्राह्मणः।
इति कर्मधारयः॥

madhyamapadalopI samAsa : Here, you have to import one or more word according to context to fulfil the meaning of the samAsa. E.g. priya has to be imported in the samAsa shAkapArthiva. The priya word is elided. Therefore it is known as madhyamapadalopI…

अथ बहुव्रीहिः
स च द्विपदो, बहुपदः सहपूर्वपदः संख्योत्तरपदः, संख्योभयपदो, व्यतिहारलक्षणो, दिगन्तराललक्षणश्चेति भेदात् सप्तविधः ।

bahuvrIhi is of seven types namely:
(1) dvipada – having two words
(2) bahupada – having more than 2 words
(3) sahapUrvapada – having 'sa' or 'saha' as first word (showing nearness or togetherness)
(4) saGkhyottarapada – having numerals as uttarapada

(5) saGkhobhayapada – having numerals as both words
(6) vyatihAralakShaNa – showing reciprocity or repitition
(7) digantarAlalakShaNa – showing the quarters of directions

तत्र द्विपदबहुव्रीहिर्यथा -
Here is the first type dvipada bahuvrIhi:

(१) चित्राः गावो यस्य सः चित्रगुः गोपः
(Comments by Mr. H.N. Bhat: Here the rule Paninian rule गोस्त्रियोरुपसर्जनस्य । । १,२.४८ । । makes the -word "go" into "gu" at the end of the compound as the long vowel of feminine suffixes and the word "go" embeded in compound. (called upasarjana technically). )
(Commentary on the above rule on www.learnsanskrit.org:
1.2.48 गोस्त्रियोरुपसर्जनस्य
and when it ends with an upasarjana and that upasarjana is either go or a word that becomes feminine because of an affix, its final vowel becomes short [e.g. śabalago "having mottled cows" becomes śabalagu, but śabalago "a mottled cow" remains the same. And when it is uparsajana, a word like mālā becomes māla, but a word like lakṣmī stays the same].)
(२) प्राप्तम् उदकं येन सः प्राप्तोदको ग्रामः।
(३) भुक्तम् ओदनं येन सः भुक्तौदनो राजा ।
(४) निर्जितः कामः येन स निर्जितकामः शिवः ।
(५) विभक्तं धनं यैस्ते विभक्तधना बन्धवः ।
(६) दत्तः सूपो यस्मै सः दत्तसूपो ब्राह्मणः।
(७) उद्धृतम् धनं यस्मात् तत् उद्धृतधनं कुण्डम्।
(८) चक्रं पाणौ यस्य सः चक्रपाणिः हरिः ।
(९) करे स्थितं धनं यस्य सः करस्थितधनो वणिक् ।
(१०) पुष्पिताः द्रुमाः यस्मिन् सः पुष्पितद्रुमः आरामः ।
(११) बहवो यज्वानो यस्यां सा बहुयज्वा शाला ।
(Comments by Mr. H.N. Bhat: In this case of यज्वन् in contrast with राजन् there are different possibilities of feminine endings.
But it goes as in the masculine, as यज्वा, यज्वानौ, यज्वानः though in बहुव्रीहि though it ends with "n" and ङीप् was required as per the rule4-1-5 ऋन्नेभ्यो ङीप्, like करिन् – करिणी, राजन् – राज्ञी etc. In this case, of बहुव्रीहि ending with अन् it is prohibited as per the rule: ४. १. १२ अनो बहुव्रीहेः.

Now, instead of ङीप्, it is optionally prescribed आ as feminine ending in Bahuvrithi as per the next rule: ४. १. १३ डाप् उभाभ्यां अन्यतरस्याम् ।

So ir can be declined as the masculine यज्वन् itself, ending in न् or like other feminine ending words with आ like रमा.

बहुयज्वा – बहुयज्वानौ – बहुयज्वानः।
बहुयज्वानम् – बहुयज्वानौ – बहुयज्वनः।
बहुयज्वना – etc.

or

बहुयज्वा – बहुयज्वे – बहुयज्वाः।
बहुयज्वाम् – बहुयज्वे- बहुयज्वाः।
बहुयज्वया – etc.

In the same way, बहुराजा also can be declined, in both ways as above. In addition, it can take ङीप् also optionally as per the rule 4-1-28 अन उपधालोपिनो ऽन्यतरस्याम्.

बहुराज्ञी – बहुराज्ञ्यौ – बहुराज्ञ्यः
बहुराज्ञीम् – बहुराज्ञ्यौ – बहुराज्ञीः

So this can be declined in three ways. Casually, the word धीवन् (= fisherman) in the compound, will take the forms like राजन्, but one more additionally.

बहुधीवा – बहुधीवानौ/बहुधीवे,

बहुधीव्नी, or बहुधीवरी -
Total form ways of declination.)
(१२) पुष्पिताः द्रुमाः यस्मित् तत् पुष्पितद्रुमं वनम्।
(१३) खरस्य मुखमिव मुखं यस्य सः खरमुखः तुरगः ।
(१४) उष्ट्रस्य मुखमिव मुखं यस्य सः उष्ट्रमुखो यक्षः ।
(१५) उच्चैर्घटो यस्याः सा उच्चैर्घटा नारी ।
अङ्गगात्रोदरस्तनकण्ठोष्ठदन्तमुखाक्षिकेशाः स्त्रियां बहुव्रीहो ईबन्ता भवन्ति। ते च यथा -

In feminine, the bahuvrIhis ending with the following words take 'Ip' as ending.
aGga, gAtra, udara, stana, kaNTha, oShTha, danta, mukha, kesha, (akSha) etc.
(१) सुन्दरम् अङ्गं यस्याः सा सुन्दराङ्गी।
(२) शोभनं गात्रं यस्याः सा सुगात्री।
(३) कृशम् उदरं यस्याः सा कृशोदरी।
(४) चारू स्तनौ यस्याः सा चारूस्तनी।
(५) इन्दीवरे इव अक्षिणि यस्याः सा इन्दीवराक्षी ।
(६) कम्बुरिव कण्ठो यस्याः सा कम्बुकण्ठी ।
(७) कुटिलाः केशाः यस्याः सा कुटिलकेशी ।

इतरेषाम् अङ्गादिवाचकानाम् स्त्रीत्वेऽपि आबन्त्वमेव। चारूदेहा, विस्तृतालका, आवृतकुचा, कुन्ददशना इत्यादि।
In other words showing parts of body, it takes 'Ap'. eg. chArudehA

(Comments by Mr. H.N. Bhat: In the above case of parts of body, PaNINIAN RULE differs in certain cases:

Generally, the बहुव्रीहि compound formed with the words denoting parts of body as part of body embeded in compound as per the rule 4-1-54 स्वाङ्गाच्च उपसर्जनादसंयोगोपधात्
which excepts the words ending with penultimate clusters of consonants, are prescribed optionally ङीष्. The exception is overruled by Vartika in the case of the words listed above as per by Vartika under the rule अङ्गगात्रकण्ठेभ्य इति वक्तव्यम्। and the rule 4-1-55 नासिका-उदर-ओष्ठ-जङ्घा-दन्त-कर्ण-शृङ्गाच्च.
In the above cases, it can take ङीष् or टाप् as

===== चन्द्रमुखी, चन्द्रमुखा। मृद्वङ्गी, मृद्वङ्गा। सुगात्री, सुगात्रा। स्निग्धकण्ठी, स्निग्धकण्ठा।
तुङ्गनासिकी, तुङ्गनासिका। तिलोदरी, तिलोदरा। बम्बोष्ठी, बम्बोष्ठा। दीर्घजङ्घी, दीर्घजङ्घा। समदन्ती, समदन्ता। चारुकर्णी, चारुकर्णा। तीक्ष्णशृङ्गी, तीक्ष्णशृङ्गा।

There are certain examples as exceptions more. with the word पुच्छ the following are examples:
कल्याणपुच्छी, कल्याणपुच्छा।but
कबरपुच्छी। मणिपुच्छी। विषयुच्छी। शरपुच्छी। only.

I could not find any examples in the list highlighed in red your message as you had mentioned under द्विपदबहुव्रीहि. Hence I have collected information where the suffixes are prescribed in the above list according to Paninian Grammar with some more informati

More can be added, but it will make the message bulky and confusing. Hence rest in the next. )

उरुपृथुलघुबहुपटुऋजुस्वादुचारूमृदुशब्दानां त्रीलिङ्गविशेषणत्वे ईबन्तत्वमपि यथा मृद्वी शाटी, लघ्वी भाषा इत्यादि ।

The adjectives listed would be used with (feminine suffix) ई also when used to qualify a noun in feminine gender (or otherwise they would be used as any feminine word ending in short vowel उ), This makes in their declinations two fold forms, one with ending ई and the other ending उ.

(Comments by Mr. H.N. Bhat:
4-1-44 वा उतो गुणवचनात्
This Paninian rule explains the above, prescribing optionally feminine endings to the adjectives qualifying the attributes of things that end in उ. Almost all the words denoting qualities of things (used as adjectives) ending in उ come under this catagory and a selection of commonly used adjective is made above. More technical details about the word गुण attribute of things could be found in this link:

http://www.avg-sanskrit.org/avgupload/sutras/4-1-44.html

The adjectives ending in “i” will take no feminine suffix. शुचिः ब्राह्मणः or ब्राह्मणी. The exception is खरुः
1 kharu mfn. white L. ; foolish , idiotic Un2. ; harsh , cruel ib. ; desirous of improper or prohibited things L
खरुः ब्राह्मणी. but गुरुः or गुर्वी पृथ्वी, which is popular by उर्वी as synonym also. as adjective उरुः, उर्वी शाला. large hall.

Any other adjectives describing the attributes of things, ending in उ can be use as above, with or without feminine ending suffix to qualify words ending in feminine gender.

The list could continue with all the adjectives you find words ending उ which could be used as such, मृदुः or मृद्वी with feminine suffix ई. The rule has been simplified collecting almost all the adjectives coming under this category. The adjective words ending in अ like शुक्ल, नील, itself take feminine ending आ, obligatorily as they denote the colour as well as used as adjectives as शुक्लः पटः, or शुक्ला पटी, शुक्लं रूपम्।

The correct translation of the sentence would be the adjectives listed would be used with (feminine suffix) ई also when used to qualify a noun in feminine gender (or otherwise they would be used as any feminine word ending in short vowel उ), This makes in their declinations two fold forms, one with ending ई and the other ending उ.

In the case of other words substantive nouns ending with short vowel उ, they will take long ऊ when used denote feminine gender, with the exception animals, and some listed words like रज्जुः etc. But it is not considered here in this list. The result of operation of this rule, will be कुरुः (m) – कुरुः (f) – बन्धुः, ब्रह्मबन्धुः (m.) will take U, ब्रह्मबन्धूः, तनुः – तनूः (both feminine when meaning body), but when used as adjective, lean, तनुः , तन्वी बाला, etc. अलाबुः – अलाबूः, कर्कन्धुः – कर्कन्धूः, etc. Exception: रज्जुः, हनुः etc.)

(Commentaries on www.avg-sanskrit.org:
4-1-44 वा उतो गुणवचनात्

काशिका
गुणम् उक्तवान् गुणवचनः। गुणवचनात् प्रातिपदिकादुकारान्तात् स्त्रियां वा ङीष् प्रत्ययो भवति। पट्वी, पटुः। मृद्वी, मृदुः। उतः इति किम्? शुचिरियं ब्राहमणी। गुणवचनातिति किम्? आखुः। वसुशब्दाद् गुणवचनाद् ङीबाद्युदात्तार्थम्। वस्वी। खरुसंयोगोपधात् प्रतिषेधो वक्तव्यः। खरुरियं ब्राह्मणी। पाण्डुरियं ब्राह्मणी। सत्त्वे निविशते ऽपैति पृथग् जातिषु दृश्यते। आधेयश्च अक्रियाजश्च सो ऽसत्त्वप्रकृतिर् गुणः।

लघु
1262 उदन्ताद् गुणवाचिनो वा ङीष् स्यात्. मृद्वी, मृदुः..

बलमनोरमा
495 वोतो गुणवचनात्। प्रातिपदिकादित्यनुवृत्तम्। वा उत इतिच्छेदः। उता गुणवचनस्य प्रातिपदिकस्य विशेषणात्तदन्तविधिः। तदाह–उदन्तादिति। वा ङीबिति। ङीषिति नात्रानुवर्तते। `गुणवचनान्ङीबाद्युदात्तार्थः' इति वार्तिकादिति भावः। मृद्वीति। मृदुशब्दान्ङीपि यण्। अत्र-`सत्त्वे निविशतेऽपैति पृथग्जातिषु दृश्यते। आधेयश्चाऽक्रियाजश्च सोऽसत्त्वप्रकृतिर्गुणः' इति भाष्ये गुणलक्षणमुक्तम्। सत्त्वं द्रव्यं समवायिकारणं, तत्रैव निविशते समवैति यः स गुण इत्यन्वयः। द्रव्यमात्रसमवेत इति यावत्। मात्रपदात्सत्ताजातिर्व्यवच्छिद्यते, तस्या द्रव्यगुणक्रियावृत्तित्वात्। अथ द्रव्यत्वेऽतिव्याप्तिवारणाय आह–अपैतीति। कतिपयद्रव्येभ्योऽपगच्छतीत्यर्थः। द्रव्यत्वस्य सर्वद्रव्यवृत्तित्वान्नातिव्याप्तिरिति भावः। एवमपि क्रियायामतिव्याप्तिवारणाय आह–आधेयश्चाक्रियाजश्चेति। आधीयते उत्पाद्यते इत्याधेयः=उत्पाद्यः, अक्रियाजः=अनुत्पाद्यः। उत्पाद्यत्वाऽनुत्पाद्यत्वाभ्यां द्विविध इति यावत्। गुणोनित्याऽनित्यभेदेन द्विविधो भवति। नित्यगतानां गुणानां नित्यत्वात्, अनित्यगतानामनित्यत्वात्। क्रियायास्तु सर्वस्या अप्युत्प#आद्यत्वान्नातिव्याप्तिरिति भावः। एवमपि द्रव्येऽतिव्याप्तिः, तस्य अवयवद्रव्यसमवेतत्वादसमवायिकारणसंयोगनाशे ततोऽपायात्, विजातीयपार्थिवाद्यवयवेषु सत्त्वात्, नित्याऽनित्यभेदसत्त्वाच्च। ?त आह–असत्त्वप्रकृतिरिति। अद्रव्यस्वभाव इत्यर्थः। द्रव्यभिन्न इति यावत्। ?त्र मात्रपदेन सत्ताजातेः, अपैतीत्यनेन द्रव्यत्वस्य, पृथग्जातिषु दृश्यते इत्यनेन गोत्वादिजातेश्च निरासत्ताद्भिन्नत्वमिति लब्धम्। `आधेयश्चाक्रियाजश्चे'त्यनेन क्रियानिरासात्क्रियाभिन्नत्वं लब्धम्। असत्वप्रकृतीरित्यनेन द्रव्यस्य निरासाद्द्रव्यभिन्नत्वं लब्धम्। तथाच जातिभिन्नत्वे सति क्रियाभिन्नत्वे सति द्रव्यभिन्नत्वे सति समवेतत्वं गुणलक्षणं निष्कृष्टं वेदितव्यम्। समवेतत्वाऽभावादभावनिरासः। अत्र `नित्यद्रव्यवृत्तयो विशेषास्त्रवनन्ता एव' इति तार्किकाभिमतविशेषपदार्थाङ्गीकारे तद्भिन्नत्वमपि निवेश्यम्। `आकडारादेक संज्ञा' इति सूत्रभाष्ये तु `समासकृदन्ततद्धितान्ताव्ययसर्वनामजातिसंख्यासंज्ञाशब्दव्यतिरिक्तमर्थवच्छब्दरूपं गुणवचनसंज्ञं भवती'त्युक्तम्। तदिदं प्रकृतसूत्रभाष्यस्थलक्षणस्यास्योक्तस्य प्रपञ्चनपरं वेदितव्यम्। परन्तु आकडारसूत्रभाष्ये संख्याशब्दभिन्नत्वमप्युपात्तम्। तदप्युक्तलक्षणे निवेश्यम्। न चैवमपि मृदुपट्वादिशब्दानां गुणविशिष्टद्रव्यवाचित्वाद्गुणवचनत्वाऽभाव इति वाच्यं, गुणवचनेत्यन्वर्थसंज्ञया गुणोपसर्जनद्रव्यवाचित्वस्यैव विवक्षितत्वात्। एवं च रूपशब्दस्य न गुणवचनता तस्य प्राधान्येन रूपवाचितया रूपवति प्रयोगाऽभावात्। रूपादिशब्दस्यापि गुणवचनशब्देन ग्रहणे `गुणवचनेभ्यो मतुपो लुगिष्टः' इत्यत्रापि रूपादिशब्दानां ग्रहणापत्तौ `रूपो घटः' इत्यादिप्रयोगापत्तेः। प्रपञ्चितं चैदरूणाधिकरणेऽस्माभिरध्वरमीमांसाकुतूहलवृत्तौ। शुचिरिति। शुक्लेत्यर्थः। `शुक्लशुभ्रशुचिउ fff दोतविशदश्येतपाण्डराः' इत्यमरः। नच शुचिधातोः `इगुपधात् कि'दित्यौणादिके इप्रत्यये उत्पन्नस्य शुचिशब्दस्य आकडारसूत्रे भाष्ये कृदन्तस्य गुणवचनत्वपर्युदासादेवात्र ङीष् न भविष्यतीति वाच्यम्, उणादीनामव्युत्पत्तिपक्षाश्रयणात्। आखुरिति। मूषिकेत्यर्थः। आखोस्तु जातिविशिष्टद्रव्यवचनत्वादुक्तगुणवचनत्वाऽभावान्न ङीप्। `खरुसंयोगापधान्ने'ति वार्तिकम्। खरुश्च संयोगापधश्चेति समाहारद्वन्द्वः। खरुशब्दात् संयोगोपधाञ्च `वोतो गुणवचनादि'ति ङीप् नेत्यर्थः। खरुशब्दमप्रसिद्धत्वाद्व्याचष्टे–पतिंवरा कन्येति। पतिलाभोत्कण्ठावतीत्यर्थः। औत्कण्ठउ fff द्लक्षणगुणोपसर्जनद्रव्यवाचितया

गुणवाचित्वात् प्राप्तिः। पाण्डुरिति। उ fff दोतेत्यर्थः। संयोगोपधत्वान्न ङीप्।

तत्त्वबोधिनी

446 गुणवचनात्। गुणो नाम नेहादेङ्रूपः, `उतः'इति विशेषणाद्वचनग्रहणाच्च, नापि विशेषणमात्रमिदम्, आखुद्रव्यमित्यादावतिप्रसङ्गादिति चेत्। अत्राहुः– `संज्ञाजातिक्रियाशब्दान् हित्वाऽन्ये गुणवाचिनः'। `चतुष्टयीशब्दानां प्रवृत्तिरित्याकरग्रन्थनिष्कर्षादेव निर्णयः' इति। भाष्ये तु `सत्त्वे निविशतेऽपैति पृथग्जातिषु दृश्यते। आधेयश्चाऽक्रियाजश्च सोऽसत्त्वप्रकृतिर्गुणः।'इति स्थितम्। सत्त्वं द्रव्यम्। सत्त्व एव निविशतो इति सावधारणं व्याख्येयम्। एतेनसत्ता व्यावर्त्त्यते। सा हि न केवलं द्रव्ये वर्तते किन्तु द्रव्यगुणकर्मसु। ननु द्रव्य एव द्रत्रयत्वं वर्तत इति तत्राऽतिव्याप्तिरत आह—अपैतीति। अपगच्छतीत्यर्थः। अर्थात्सत्त्वादेव। यथा पीततायां जातायां फलादेर्नीलताऽपैति, नैवं द्रव्यत्वं द्रव्यादपैति। एवमपि गोत्वं गोषु वर्तते अउ fff दाआदेश्चापैति तत्रातिव्याप्तिरत आह–पृथग्जातिषुदृश्यत इति। गोत्वं हि द्रव्यत्वाऽवान्तरनानाजातिषु न दृश्यते। गुणस्तु दृश्यते। यथा अम्रे दृष्टा नीलता तृणादिष्वपि दृश्यते। एतेन पूर्वार्धेन सकलजातेव्र्यवच्छेदः। एवं तर्हि कर्म द्रव्ये वर्तते ततोऽपैति पृथग्जातिषु दृश्यते चेति तत्रातिव्याप्तिरत आह–आधेयश्चाक्रियाजश्चेति। उत्पाद्योऽनुत्पाद्य इत्यर्थः। उत्पाद्यो–यथा घटादेः पाकजो रूपादिः। अक्रियाजोऽनुत्पाद्यः। स यथा आकाशादेर्महत्त्वादिः। क्रिया तु सर्वाप्युत्पाद्यैव न नित्येति तस्या द्वैविध्याऽभावाद्गुणत्वाऽभावाः। एवमपिल द्रव्यस्य गुणत्वं प्राप्नोति, अवयविद्रव्यं ह्रस्तपादादिषु दृश्यते, द्विविधं च भवति नित्याऽनित्यभेदेन, निरवयवस्याऽत्मपरमाण्वादेर्नित्यात्वादवयविद्रव्यस्य तु घटादेरनित्यत्वादत आह–असत्त्वपर्कृतिरिति। अद्रव्यस्वभाव इत्यर्थः। पतिवरेति। एवं च पाणिग्रहणोत्कण्ठाभिधायित्वाद्गुणवचनोऽयमिति भावः।)

इति द्विपदबहुव्रीहिः॥

This is all about dvipadabahuvrIhi.

(२) बहुपदो यथा – अधिकः उन्नतः अंसो यस्य सः अधिकोन्नतांसः।

Now let us see bahupada bahuvrIhi:

E.g. as above. Here there are more than 2 (namely three) words, adhika, unnata, aMsa:. Thus this is an example of bahupada.

(३) सहपूर्वपदो यथा – सह कृष्णेन वर्तत इति सकृष्णः । सह पुत्रेण इति सपुत्रः। रामेण सह वर्तत इति सरामः।

sahapUrvapada bahuvrIhi – it is used in sense of togetherness, nearness or closeness or conjugation…

(Comments by Mr. H.N. Bhat:

Even though there is no suffix for case ending, this compound with सह can be substituted with स optionally in बहुव्रीहि compound. Hence both forms are possible:

सहकृष्णः, सकृष्णः)

(४) संख्योत्तरपदो यथा – दशानां समीपे ये सन्ति,ते उपदशाः।

saGkhyottarapada bahuvrIhi – that which is nearby 10 is upadashA:

(Comments by Mr. H.N. Bhat:

2-2-25 सङ्ख्यया ऽव्ययाऽसन्नादूराधिकसङ्ख्याः सङ्ख्येये

The above compound is formed is explained as Bahuvrihi, as per the above rule, which forms the compounds with numerals used to denote the count of the things, like एकः, द्वौ etc. denoting the number of the counted qualifying it. The compound between formed with these numerals, with the above अव्यय, आसन्न, अदूर, अधिक, and सङ्ख्या (numerals) are covered by this rule under bahuvrihi.

The above example is for the bahuvrihi, between the two numerals, which covers the more examples of the type.

The more examples of the 4th type of Bahuvrihi, are covered in the above rule itself:

उपविंशाः। आसन्नदशाः। आसन्नविंशाः। अदूरदशाः। अदूरविंशाः। अधिकदशाः। अधिकविंशाः।

The first being collected with अव्यय, उप meaning समीपे , the total meaning nearly twenty. The same with other compounds with the other words in the rule. The last one in the list is again संख्या, which was described under the next item ५ as संख्योभयपद.

according to the Paninian rule 6-3-82 वा उपसर्जनस्य. )

(५) संख्योभयपदो यथा – द्वौ वा त्रयो वा द्वित्राः ।

saGkhyobhayapada bahuvrIhi – that which is either 2 or three..

(Comments by Mr. H.N. Bhat:

2-2-25 सङ्ख्यया ऽव्ययाऽसन्नादूराधिकसङ्ख्याः सङ्ख्येये

The above compound is formed is explained as Bahuvrihi, as per the above rule, which forms the compounds with numerals used to denote the count of the things, like एकः, द्वौ etc. denoting the number of the counted qualifying it. The compound between formed with these numerals, with the above अव्यय, आसन्न, अदूर, अधिक, and सङ्ख्या (numerals) are covered by this rule under bahuvrihi.

The above example is for the bahuvrihi, between the two numerals, which covers the more examples of the type>

द्वित्राः, त्रिचतुराः, पञ्चषाः, etc. are commonly used, in the sense one or two, three or four, five or six respectively, showing the uncertainty of the total number of the counted between the two numbers. Others could also be formed. But for dvandva, these एक to चतुर् will make एकश्च एकश्च – द्वौ and not एकौ as द्वन्द्व compound. But पञ्च च दश च – पञ्चदश, This is because they take the gender and number of the counted thing, but they have distinct numbers unlike those above five. Only after ten, you will get such एकादश etc. Before ten, पञ्च बालाः, दश ब्राह्मणाः etc.

In the above cases, the numerals denoting the counted objects are added suffix in the compound.
5-4-73 बहुव्रीहौ सङ्ख्येये डजबहुगणात्
it takes they take समासान्त suffix डच् making the numerals ending in अ.
They are used in plural also always.

In the same way, एकद्वानि, पञ्चषाः, त्रिचतुरा, चतुष्पञ्चाः etc.)

(६) व्यतिहारलक्षणो यथा – केशेषु केशेषु गृहीत्वा इदम् युद्धम् प्रवृत्तम् इति केशाकेशि युद्धम्। दण्दैर्डण्डैः कृत्वा इदम् युद्ध प्रवृत्तम् इति दण्डादण्डि।
vyatihAralakShana bahuvrIhi – Difficult to translate in English. But in the present examples it means that the warriors fought catching each other's hairs in the first example or they both fought with the stick in second example.

(Comments by Mr. H.N. Bhat:
by the Paninian rule:
2-2-27 तत्र तेन इदम् इति सरूपे

More information on this compound and its meaning can be found in the commentaries on it:

http://www.avg-sanskrit.org/avgupload/sutras/2-2-27.html

The above describes the fighting, in which the weapons named in the compound are used against each other.
and hence it takes the suffix in the compound इच् by the rule:

इच् कर्मव्यतीहारे (5,4.127) and it is considered as indeclinable adverb.

which is and it is inde
clinable too as an adverb as per .

Any clarification on the topics dealt with will be provided on demand.

Hope this all the case of समासान्त suffixes in the examples in the list.

which is and it is indeclinable too as an adverb as per the list of अव्यय–s provided in the Paninian rule:

http://www.avg-sanskrit.org/avgupload/sutras/2-1-17.html)

(Commentaries as per www.avg-sanskrit.org:
2-2-27 तत्र तेन इदम् इति सरूपे

काशिका
तत्र इति सप्तम्यन्तं गृह्यते। तेन इति तृतीयान्तम्। सरूपग्रहनं प्रत्येकम् अभिसम्बध्यते। तत्र इति सप्तम्यन्ते सरूपे पदे तेनेति च तृतीयान्ते इदम् इत्येतस्मिन्नर्थे संस्येते, बहुव्रीहिश्च समासो भवति। इतिकरनश्च इह विवक्षार्थो लौकिकम् अर्थम् अनुसारयति। ततो ग्रहणं, प्रहरनं कर्मव्यतीहारो, युद्धं च समासार्थः इति सर्वम् इतिकरनाल्लभ्यते। यत् तत्र इति निर्दिष्टं ग्रहणम् चेत् तद् भवति, यत् तेन इति निर्दिष्टं प्रहरनं चेत् तद् भवति, यतिदम् इति निर्दिष्टं युद्धं चेत् तद् भवति। केशेषु केशेषु च गृहीत्वा इदं युद्धं प्रवृत्तं केशाकेशि। कचाकचि। दण्डैश्च दण्डैश्च प्रगृत्य इदं युद्धं प्रवृत्तं दण्डादण्डि। मुसलामुसलि। इच् कर्मव्यतीहारे (*5,4.127) इति इच् समासान्तः, स च अव्ययम्। अन्येषाम् अपि दृश्यते (*6,3.137) इति पूर्वपदस्य दीर्घत्वम्। सरूपग्रहणं किम्? हलैश्च मुसलैश्च प्रहृत्य इदं युद्धं प्रवृत्तम्।

लघु
–

बलमनोरमा

836 तत्र तेन। समास इति, बहुव्रीहिरिति चाधिकृतम्। `तत्रे'त्यनेन सप्तम्यन्ते पदे विवक्षिते। `ग्रहणविषये' इति प्रथमाद्विवचनान्तं तद्विशेषणमध्याहार्यम्। `तेने'त्यनेन तु तृतीयान्ते पदे विवक्षिते। `प्रहरणविषये'इति, प्रथमाद्विवचनान्तं तद्विशेषणमध्ताहार्यम्। `सरूपे' इति प्रथमाद्विवचनान्तं पदविशेषणम्। `ग्रहणविषये' इति `प्रहरणविषये' इति तु सप्तम्यन्तयोस्तृतीयान्तयोश्च यथासङ्ख्यमन्वेति। `इद'मित्यर्थनिर्देशः। `युद्धं प्रवृत्त'मिति तद्विशेष्यमध्याहार्यम्। कर्मव्यतिहारे द्योत्ये'इत्यपयध्याहार्यम्। तदाह–सप्तम्यन्ते इति। प्रथमाद्विवचनमिदम्। ग्रहणविषये इति। गृह्रते अस्मिन्निति ग्रहणं=केशादि। अधिकरणे ल्युट्, तत् विषयः=वाच्यं ययोस्ते ग्रहणविषये। ग्रहणवाचके इति यावत्। प्रहरणविषये इति। प्रह्रियते अनेनेति प्रहरणं =दण्डादि। तत्-विषयः=वाच्यं ययोस्ते प्रहरणविषये। प्रहरणवाचके इति यावत्। अत्रापि `सरूपे'पदे इन्यन्वेति। इदं युद्धं प्रवृत्तमित्यर्थे इति। `इद'मिति सामान्यार्थनिर्देशः। `युद्ध'मिति विशेषनिर्देशः। अतः केशाकेशि युद्धिमिति न पुनरुक्तिः। परस्परग्रहणं परस्परप्रहरणं च कर्मव्यतिहारः। ननु `ग्रहणविषये' `प्रहरणविषये'इत्यध्याहारे किं प्रमाणमित्यत आह– इतिशब्दादिति। इतिशब्दो लौकिकप्रसिद्धप्रकारवचनः। `केशाकेशी'त्यादिलौकिकप्रयोगे यावानर्थः प्रसिद्धस्तावत्यर्थेऽयं बहुव्रीहिर्भवतीत्यर्थः। ने्

तत्त्वबोधिनी
732 तत्र तेनेदं। ग्रहण विषय इति। गृह्रते अनेनेति ग्रहणं=केशादि। तद्विषयो=वाच्यो ययोस्ते सरूपे। प्राह्रियते अनेनेति प्रहरणं=दण्डादि, तद्विषयो=वाच्यो ययोरिति प्राग्वत्। कर्मव्यतिहारः=परस्परग्रहणं, परस्परप्रहरणं च। ननु `ग्रहणविषये सप्तम्यन्ते समस्येते, प्रहरणविषये तृतीयान्ते चे'त्यादिविषयविशेषः सूत्राक्षरैः कथं लभ्यत इत्यत आह—इति शब्दादिति। स हि लौकिकीं विवक्षां दर्शयति। लोके केशाकेशीत्यादिप्रयोगे यावानर्थः प्रतीयते तावत्यर्थे बहुव्रीहिर्भवतीत्यर्थः।)

(७) दिगन्तराललक्षणो यथा – दक्षिणस्याः पूर्वस्याश्च दिशो यद् अन्तरालम् सा दक्षिणपूर्वा ।
digantarAlalakShaNa bahuvrIhi – it is used to denote the quarters of direction.
E.g. the direction which is between the south and the east is dakShiNapUrvA direction (south east).

इति बहुव्रीहिः॥
Thus ends bahuvrIhi samAsa.

(Comments by GSS Murthy:
शब्दरत्नाकर of G V Krishnamacharyar gives the following classification for बहुव्रीहि
१.द्विपद
२.बहुपद
३.व्यधिकरण
४.विकार
५.सङ्घात
६.अभ्यास
७.विकल्प
८.सामीप्य
९.दिगन्तराल
१०.व्यतिहारलक्षण
११.समसम्बन्ध
१२.उपमान
१३.लुप्तमध्यमपद
१४.उपमा
१५.क्रियापूर्वपद
१६.नञ्
१७.प्रादि
Needless to say that this sort of classification, which our Sanskrit scholars of yore reveled in, is needless.
He further classifies द्विपद into seven categories depending on the case that links the two words.
द्वित्राः (द्वौ वा त्रयो वा), त्रिचतुराः (त्रयो वा चत्वारो वा) come under the category of विकल्पबहुव्रीहि.
He has given examples for each category. Perhaps going into further detail may not serve any purpose. )
अथ द्विगुः।
द्विगुसमासो द्विविधः – एकवद्भावी अनेकवद्भावी चेति।
एकवद्भावी द्विगुर्यथा – त्रयाणां शृङ्गाणां समाहारः त्रिशृङ्गम्। पञ्चानां फलानां समाहारः पञ्चफली॥ अनेकवद्भावी द्विगुर्यथा – सप्त च ते ऋषयश्च सप्तर्षयः ॥
इति द्विगुः॥

Now let' see dvigu samAsa.

It is of two types: ekavadbhAvI and anekavadbhAvI

ekavadbhAvI dvigu: trizRGgam – group of three horns, group of five fruits etc..

anekavadbhAvI dvigu: saptarSi – they are seven and they are all RSis.
(Comments by Mr. H.N. Bhat: समाहारे एकवद्भावः

this refers to the group as a unit and takes singular only
otherwise, individually it takes plural in anekavadbhAvI dvigu.

in the usage, ekavadbhAvI is used in feminine gender,
even though समाहर is masculine
excepting another set called पात्रादि
पञ्चानां वटानां समाहारः पञ्चवटी
but त्रयाणां भुवनानां समाहारः – त्रिभुवनम्
but त्रयाणां लोकानां समाहारः – त्रिलोकी
etc.)

(Commentaries on www.avg-sanskrit.org:
2-4-1 द्विगुरेकवचनम्

काशिका
द्विगुः समासः एकवचनं भवति। एकस्य वचनम् एकवचनम्। एकस्य अर्थस्य वाचको भवति इत्यर्थः। तदनेन प्रकारेण द्विग्वर्थस्य एकवद् भावो विधीयते, द्विग्वर्थ एकवद् भवति इति। समाहारद्विगोश्च इदं ग्रहणम्, न अन्यस्य। पञ्चपूलाः समाहृताः पञ्चपूली। दशपूली। द्विग्वर्थस्य्)अ ए)कत्वादनुप्रयोगे ऽप्येकवचनं भवति, पञ्चपूलीयं शोभना इति।

लघु
945 द्विग्वर्थः समाहार एकवत्स्यात्..

बलमनोरमा
721 द्विगुरेकवचनम्। अत्र `समाहारग्रहणं कर्तव्य'मिति वार्तिकात्समाहार इति लभ्यते। वक्तीति वचनम्। बाहुलकः कर्तरि ल्युट्। सामान्ये नपुंसकम्। समाहारे द्विगुरेकार्थप्रतिपादकः स्यादिति लभ्यते। तत्र यदि समाह्रियत इति कर्मणि घञि समाहारशब्दः समाहृतप्रधानः तदा समाहृतगतद्वित्वबहुत्वयोः एकत्वानुपपत्तेरतिदेशः सम्पद्यते। तदाह–द्विग्वर्थः समाहार एकवदिति। यदा समाहरणं समाहारः=समूहः, तदा तस्यैकत्वादेव सिद्धमिति नेदं सूत्रमारम्भणीयमिति भाष्ये स्पष्टम्। केचित्तु समूहस्य वस्तुत एकत्वेऽपि उद्भूतावयवभेदविवक्षया द्विबहुवचनव्यावृत्त्यर्थमिदम्। एवं चात्र उद्भूतावयवभेदविवक्षा न कर्तव्येति फलतीत्याहुः।र्न्स नपुंसकमिति। समाहारे द्विगुद्वन्द्वश्च नपुंसकं स्यादिति तदर्थो मूले वक्ष्यते।[इति द्विगुसमासः]।र्न्

तत्त्वबोधिनी
639 द्विगुरेकवचनम्। वक्तीति वचनम्। बाहुलकात्कर्तरि ल्युट्। `सामान्ये नपुंसकम्'। द्विगुः समास एकर्थप्रतिपादको भवतीत्यर्थः। न च वस्तुतोऽनेकार्थस्यैकार्थत्वं कथंचिदुपपद्यत इति सामथ्र्यादतिदेशः संपद्यत इत्याह–एकवत्स्यादिति। `समाहारे'इति तूपसङ्ख्यानाल्लभ्यते। समाहारे यो द्विगुस्तदर्थ एकवदित्यवयः। समाहारे किम्?। तद्धितार्थे माभूत्। पञ्चसु कपालेषु संस्कृताः पञ्चकपालाः, पञ्चभिर्गोभिः क्रीताः पञ्चगवः पटाः। पञ्चगवे पञ्चगवानीत्यत्र तु प्रथम् द्विगर्थस्यैकवद्भावे कृते योऽयमेकशेषे कृते द्विगर्थसमुदायस्तस्याऽद्विगर्थत्वाद्बहिरङ्गत्वाच्चैतवद्भावो न भवतीति स्थितमाकरे। यदा `तद्धितार्थ'इति सूत्रे `समाहारे'इति कर्मसाधनस्तदा समाहृतप्रधानो द्विगुरिति बहुत्वे प्राप्तेऽनेन एकवद्भावः क्रियते। यदा तु भावसाधन एव समाहारस्तदा समूहप्रधानत्वाद्विगोः, समूहस्य चैकत्वात्सिद्धमेकत्वमिति नास्य प्रयोजनम्। न च `स नपुंसक'मिति नपुंसकत्वार्थमेकत्वविधानमितिवाच्यं, समुदायवाचकेषु `सामान्ये नपुंसक'मित्यभ्युपगमे बाधकाऽभावादित्याहुः। वस्तुतस्तु `तद्धितार्त'इति सूत्रे समाहार इति भावे घञ्न तु कर्मणि। `पञ्चगव'मित्यत्र पञ्च गव#ः समाहृता इत्यर्थाभ्युपगमे समाह्रियमाणानां बहुत्वेन एकवचनानुपपत्तेः। न च `द्विगुरेकवचन'मिति सूत्रान्नैवमिति वाच्यम्, पञ्चखट्वीत्यसिद्धेः। तत्र हि पञ्च खट्वाः समाहृताः, पञ्चसु खट्वासु समाहृतास्वित्येवं विग्रहसंभवेन नियतविभक्तित्वाऽभावादेविभक्ति चापूर्वनिपाते इत्यप्रवृत्तेरनुपसर्जनत्वात् `गोस्त्रियो'रिति ह्रस्वो न स्यात्। ततश्च `आबन्तो वे'ति स्त्रीत्वपक्षे `द्विगोः'इत्यदन्तलक्षणो ङीब्न स्यात्। भावसाधनत्वे त्वेकविभक्तित्वादुपसर्जनत्वमव्याहतमेव। समाहारापेक्षया नियमेन वर्तिपदानां षष्ठउ fff दन्तत्वात्, तथा च पञ्चखट्वीत्यादिरूपं निर्बाधमेवेति दिक्। स नपुंसकमिति। एतस्यार्थो मूल एव स्फुटीभविष्यति। )

अथ द्वन्द्वः।
द्वन्द्वो हि द्विविधः। इतरेतरयोगसमाहारभेदात् ।
(१) इततेतरयोगद्वन्द्वो यथा – प्लक्षश्च न्यग्रोधश्च प्लक्षन्यग्रोधौ। रामश्च कृष्णश्च रामकृष्णौ ।
(२) समाहारद्वन्द्वो यथा – हरिश्च हरश्च गुरुश्च एषां समाहारः हरिहरगुरु।

प्राणितूर्यसेनाङ्गानां द्वन्द्वैकवद्भावः।
(१) प्राण्यङ्गे यथा – पाणी च पादौ च मुखं च पाणिपादमुखम्।
२) तूर्याङ्गे यथा – मार्दङ्गिकं वैणविकश्च मार्दङ्गिकवैणविकम्।
(३) सेनाङ्गे यथा – राजन्याश्च रथाश्च अश्वाश्च राजन्यरथाश्वम्।

इति द्वन्द्वः॥

(Commentaries on www.avg-sanskrit.org:
2-4-2 द्वन्द्वश् च प्राणितूर्यसेनाऽङ्गानाम्

काशिका

